योगिताकभेदवत्त्वमात्रं तदा वह्निमान् धूमादित्यत्र यत्किंचिद्वह्न्यनधिकरणे पर्वतादौ वर्त्तमाने धूमेऽप्यप्रसिद्धमित्यर्थः । अप्यर्थकचकारात्केवलान्वयिसाध्यकसमुच्चयः । तथा च व्यापकाभावाद्व्याप्यीभूतं तदुभयलक्षणमपि तदुभयत्राऽप्रसिद्धमिति भावः । साध्यानधिकरणाऽनधिकरणत्वमिति यथाश्रुतं तु न संगच्छते यथोक्तलक्षणद्वयस्य तत्स्वरूपत्वाऽभावादिति ध्येयम् ।

भट्टाचार्यानुयायिनस्तु तदुभयमपि—तदुभयलक्षणवाक्यमपि साध्यानधिकरणानधिकरणत्वं साध्यानधिकरणाऽनधिकरणत्वबोधजनकं साध्याधिकरणत्वसामान्याभाववद्वृत्तित्वाभाव—साध्यवत्सामान्यभिन्नवृत्तित्वाभावान्यतरबोधजनकमिति यावत् । तच्च—तादृशान्यतराभाववत्त्वं च, तत्र- केवलान्वयिसाध्यकेऽप्रसिद्धमित्यन्वयः । साध्याधिकरणत्वसामान्याभावादेरप्रसिद्धत्वादिति भावः । ननु तदुभयवाक्यं न प्रागुक्ताऽभावान्यतरविषयकबोधजनकमपि तु साध्याधिकरणत्वप्रतियोगिकाभाववद्वृत्तित्वसामान्याभावसाध्यवत्प्रतियोगिकभेदवद्वृत्तित्वसामान्याभावान्यतरबोधजनकमेव साध्याधिकरणत्वप्रतियोगिकाभावसाध्यवत्प्रतियोगिकभेदौ च केवलान्वयिन्यपि प्रसिद्धावित्यत आह यत्किंचिदिति । शेषं पूर्ववदित्याहुः ।

इति श्रीमथुरानाथतर्कवागीशकृतसिंहव्याघ्रलक्षणव्याख्या समाप्ता ।

---

मान् गगनादित्यत्रातिव्याप्तिः, अवृत्तिगगने तथाविधवृत्तित्वाभावसत्त्वादिति वाच्यम् । व्याप्त्याश्रये तत्र भ्रमात्मकपक्षधर्मताज्ञानादनुमित्यङ्गीकारेण क्षतेरभावात् । यदि च तत्र न व्याप्यत्वव्यवहारस्तदा वृत्तिमत्त्वं निवेश्य साध्यानधिकरणवृत्तित्वाभावविशिष्टवृत्तिमत्त्वमित्यस्यैवोपदर्शितरीत्या सम्यक्त्वात् । नचैवं सति साध्यवदन्यावृत्तित्वं व्याप्तिरित्यनेन पौनरुक्त्यमिति वाच्यम् । साध्यवदन्यवृत्तिभिन्नत्वस्याऽत्र लक्षणे वाक्यार्थत्वम् तत्र च वृत्तित्वात्यन्ताभावनिवेशात् इति ।

इति श्रीशिवदत्तमिश्रकृतमाथुरीसिंहव्याघ्रलक्षणव्याख्या समाप्ता ।

शिवं भूयात् ।

